# अथ विष्णुसहस्रनामप्रारंभः ।

श्रीगणेशाय नमः ॥ श्रीमद्वेङ्कटेशाय नमः ॥
यस्य स्मरणमात्रेण जन्मसंसारबंधनात्॥ विमु-
च्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥ १॥ नमः
समस्तभूतानामादिभूताय भूभृते॥ अनेकरूप-
रूपाय विष्णवे प्रभविष्णवे ॥ २ ॥ वैशंपायन
उवाच॥श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः॥
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ ३ ॥
युधिष्ठिर उवाच ॥ किमेकं दैवतं लोके किंवा-
प्येकं परायणम्॥ स्तुवन्तः कं कमर्चन्तः प्राप्नु-

यमानवाः शुभम् ॥ ४ ॥ को धर्मः सर्वधर्माणां
भवतः परमो मतः ॥ किं जपन्मुच्यते जन्तुर्ज-
न्मसंसारबन्धनात् ॥ ५ ॥ भीष्म उवाच ॥
जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ॥ स्तुवन्ना-
मसहस्रेण पुरुषः सततोत्थितः ॥ ६ ॥ तमेव
चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ॥ ध्यायन्
स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ७ ॥ अना
दिनिधनं विष्णुं सर्वलोकमहेश्वरम् ॥ लोकाध्यक्षं
स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ८ ॥ ब्रह्मण्यं

सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ॥ लोकनाथं
महद्भूतं सर्वभूतभवोद्भवम् ॥९॥ एष मे सर्व-
धर्माणां धर्मोऽधिकतमो मतः॥ यद्भक्त्या पुंडरी
काक्षं स्तवैरर्चेन्नरः सदा ॥ १०॥ परमं यो महत्ते
जः परमं यो महत्तपः ॥ परमं यो महद्ब्रह्म परमं
यः परायणम् ॥ ११ ॥ पवित्राणां पवित्रं यो
मङ्गलानां च मङ्गलम् ॥ दैवतं देवतानां च भूता
नां योऽव्ययः पिता ॥ १२ ॥ यतः सर्वाणि भूता
नि भवंत्यादियुगागमे ॥ यस्मिंश्च प्रलयं यान्ति

पुनरेव युगक्षये ॥१३॥ तस्य लोकप्रधानस्य जग
न्नाथस्य भूपते ॥ विष्णोर्नामसहस्रं मे शृणु पाप
भयापहम् ॥ १४ ॥ यानि नामानि गौणानि
विख्यातानि महात्मनः ॥ ऋषिभिः परिगी-
तानि तानि वक्ष्यामि भूतये ॥ १५ ॥ ऋषिर्नाम्नां
सहस्रस्य वेदव्यासो महामुनिः ॥ छंदोऽनुष्टुप्
तथा देवो भगवान्देवकीसुतः ॥ १६ ॥ अमृतां
शूद्भवो बीजं शक्तिर्देवकिनन्दनः ॥ त्रिसामा
हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥ १७ ॥

विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम् ॥
अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमम् ॥१८॥
अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमहामं-
त्रस्य भगवान्वेदव्यास ऋषिः ॥ अनुष्टुप्छंदः॥
श्रीकृष्णः परमात्मा श्रीमन्नारायणो देवता ॥
अमृतांशूद्भवो भानुरिति बीजम् ॥ देवकी
नन्दनः स्रष्टेति शक्तिः ॥ त्रिसामा सामगः
सामेति हृदयम् ॥ शङ्खभृन्नंदकी चक्रीति कील-
कम् ॥ शार्ङ्गधन्वा गदाधर इत्यस्त्रम् ॥ रथांग-

पाणिरक्षोभ्य इति कवचम् ॥ उद्धवः क्षोभणो
देव इति परमो मंत्रः ॥ श्रीकृष्णप्रीत्यर्थे विष्णो
र्दिव्यसहस्रनामस्तोत्रजपे विनियोगः ॥ अथ
करन्यासः ॥ ॐ उद्धवाय अंगुष्ठाभ्यां नमः ॥
ॐ क्षोभणाय तर्जनीभ्यां नमः ॥ ॐ देवाय
मध्यमाभ्यां नमः ॥ ॐ उद्धवाय अनामिकाभ्यां
नमः ॥ ॐ क्षोभणाय कनिष्ठिकाभ्यां नमः ॥
ॐ देवाय करतलकरपृष्ठाभ्यां नमः ॥ इति
करन्यासः ॥ ॥ अथ हृदयादिषडंगन्यासः ॥

सुव्रतः सुमुखः सूक्ष्मः ज्ञानाय हृदयाय नमः ॥
सहस्रमूर्धा विश्वात्मा ऐश्वर्याय शिरसे स्वाहा ॥
सहस्रार्चिः सप्तजिह्वः शक्त्यै शिखायै वषट् ॥
त्रिसामा सामगः साम बलाय कवचाय हुम् ॥
रथाङ्गपाणिरक्षोभ्यः तेजसे नेत्राभ्यां वौषट् ॥
शार्ङ्गधन्वा गदाधरः वीर्याय अस्त्राय फट् ॥
ऋतुः सुदर्शनः कालः भूर्भुवः स्वरोम् इति
दिग्बंधः ॥ इति हृदयादिन्यासः ॥

## अथ ध्यानम् ।

ॐ क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकतैर्मौक्तिकानां मालाक्लृप्तासनस्थः स्फटिकमणिनिभैर्मौक्तिकैर्मण्डिताङ्गः ॥ शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूषवर्षैरानन्दी नः पुनीयादरिनलिनगदाशंखपाणिर्मुकुंदः ॥ १ ॥ अथवा ॥ भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे कर्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वास्तव्यमाब्धिः ॥ अन्तःस्थं यस्य

विश्वं सुरनरखगगोभोगिगंधर्वदैत्यैश्चित्रं रंरम्यते
तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ २ ॥
अथवा ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ॥
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ ३ ॥
अथवा ॥ मेघश्यामं पीतकौशेयवासं श्रीवत्साङ्कं
कौस्तुभोद्भासिताङ्गम् ॥ पुण्योपेतं पुण्डरी
कायताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥ ४ ॥

अथवा ॥ सशंखचक्रं सकिरीटकुण्डलं सपीत
वस्त्रं सरसीरुहेक्षणम् ॥ सहारवक्षःस्थलकौस्तुभ
श्रियं नमामि विष्णुं शिरसा चतुर्भुजम् ॥ ९ ॥
हरिः ॐ ॥ विश्वं विष्णुर्वषट्कारो भूतभव्यभव
त्प्रभुः॥भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः
॥१॥पूतात्मा परमात्मा च मुक्तानां परमागतिः ॥
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥२॥
योगो योगविदां नेता प्रधानपुरुषेश्वरः ॥
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥ ३ ॥

सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ॥
संभवो भावनो भर्त्ता प्रभवः प्रभुरीश्वरः ॥ ४ ॥
स्वयंभूः शंभुरादित्यः पुष्कराक्षो महास्वनः ॥
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥५ ॥
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः।विश्वकर्मा
मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ६ ॥
अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ॥
प्रभूतास्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥ ७ ॥
ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ॥

हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ८ ॥
ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ॥
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ ९ ॥
सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ॥ अहः
संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ १० ॥
अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ॥
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ ११ ॥
वसुवसुमनाः सत्यः समात्मा संमितः समः ॥
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ १२ ॥

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ॥ अ
मृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥ १३ ॥
सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ॥ वेदो
वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥ १४ ॥
लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ॥
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५ ॥
भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ॥
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ १६ ॥
उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ॥ अतीं

न्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ॥१७॥
वेद्यो वैद्यःसदायोगी वीरहा माधवो मधुः॥अती
न्द्रियो महामायो महोत्साहो महाबलः ॥१८ ॥
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ॥ अनि
र्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ १९ ॥
महेष्वासो महीभर्ता श्रीनिवासः सतांगतिः ॥
अनिरुद्धः सुरानन्दो गोविन्दो गोविदांपतिः
॥ २० ॥ मरीचिर्दमनो हंसः सुपर्णो भुजगो
त्तमः ॥ हिरण्यनाभः सुतपाः पद्मनाभः प्रजा

पतिः ॥ २१ ॥ अमृत्युः सर्वदृक् सिंहः संधाता
संधिमान् स्थिरः ॥ अजो दुर्मर्षणः शास्ता विश्रु
तात्मा सुरारिहा ॥ २२ ॥ गुरुर्गुरुतमो धाम स
त्यः सत्यपराक्रमः ॥ निमिषोऽनिमिषः स्रग्वी
वाचस्पतिरुदारधीः ॥ २३ ॥ अग्रणीर्ग्रामणीः
श्रीमान् न्यायो नेता समीरणः। सहस्रमूर्धा विश्वा
त्मा सहस्राक्षः सहस्रपात् ॥ २४ ॥ आवर्त्तनो
निवृत्तात्मा संवृतः संप्रमर्दनः। अहः संवर्त्तको वह्नि
रनिलो धरणीधरः ॥ २५ ॥ सुप्रसादः प्रसन्ना

वि. त्मा विश्वसृड् विश्वभुग्विभुः॥सत्कर्त्ता सत्कृतः स.
१ साधुर्ज्जह्नुर्नारायणो नरः ॥ २६ ॥ असंख्येयो
ऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ॥ सिद्धार्थः
सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः॥२७॥वृषा
ही वृषभो विष्णुर्वृषपर्वा वृषोदरः॥वर्द्धनो वर्द्धमा
नश्च विविक्तः श्रुतिसागरः॥२८ ॥ सुभुजो दुर्धरो
वाग्ग्मी महेन्द्रो वसुदो वसुः ॥ नैकरूपो बृहद्रूपः
शिपिविष्टः प्रकाशनः ॥ २९ ॥ ओजस्तेजोद्युति १
धरः प्रकाशात्मा प्रतापनः ॥ ऋद्धः स्पष्टाक्षरो

मंत्रश्चन्द्रांशुर्भास्करद्युतिः ॥३०॥ अमृतांशूद्भवो
भानुः शशबिन्दुः सुरेश्वरः ॥औषधं जगतः सेतुः
सत्यधर्मपराक्रमः ॥ ३१ ॥ भूतभव्यभवन्नाथः
पवनः पावनोऽनलः ॥ कामहा कामकृत्कान्तः
कामः कामप्रदः प्रभुः ॥ ३२ ॥ युगादिकृद्युगाव
र्तो नैकमायो महाशनः ॥ अदृश्यो व्यक्तरूप
श्च सहस्रजिदनंतजित् ॥ ३३ ॥ इष्टोऽविशिष्टः
शिष्टेष्टः शिखण्डी नहुषो वृषः॥क्रोधहा क्रोधकृत
र्त्ता विश्वबाहुर्महीधरः ॥ ३४ ॥ अच्युतः

प्रथितः प्राणः प्राणदो वासवानुजः ॥ अपांनि
धिराधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५ ॥ स्कंदः
स्कन्दधरो धुर्यों वरदो वायुवाहनः ॥ वासुदेवो
बृहद्भानुरादिदेवः पुरन्दरः ॥ ३६ ॥ अशोकस्ता
रणस्तारः शूरः शौरिर्जनेश्वरः ॥ अनुकूलः शता
वर्त्तः पद्मी पद्मनिभेक्षणः ॥ ३७ ॥ पद्मनाभोऽर
विंदाक्षः पद्मगर्भः शरीरभृत् । महर्द्धिर्ऋद्धो वृद्धा
त्मा महाक्षो गरुडध्वजः ॥ ३८ ॥ अतुलः शरभो
भीमः समयज्ञो हविर्हरिः ॥ सर्वलक्षणलक्षण्यो

लक्ष्मीवान् समितिञ्जयः ॥ ३९॥ विक्षरो रोहितो
मार्गो हेतुर्दामोदरः सहः ॥ महीधरो महाभागो
वेगवानमिताशनः ॥ ४० ॥ उद्भवः क्षोभणो देवः
श्रीगर्भः परमेश्वरः॥ करणं कारणं कर्त्ता विकर्त्ता
गहनो गुहः ॥ ४१ ॥ व्यवसायो व्यवस्थानः
संस्थानः स्थानदो ध्रुवः। परर्द्धिः परमःस्पष्टस्तुष्टः
पुष्टः शुभेक्षणः ॥ ४२ ॥ रामो विरामो विरजो
मार्गो नेयो नयोऽनयः ॥ वीरः शक्तिमतां श्रेष्ठो
धर्मो धर्मविदुत्तमः ॥४३ ॥ वैकुण्ठः पुरुषः प्राणः

प्राणदः प्रणवः पृथुः॥ हिरण्यगर्भः शत्रुघ्नो व्याप्तो
वायुरधोक्षजः ॥ ४४ ॥ ऋतुः सुदर्शनः कालः
परमेष्ठी परिग्रहः॥उग्रः संवत्सरो दक्षो विश्रामो
विश्वदक्षिणः ॥ ४५ ॥ विस्तारः स्थावरः स्थाणुः
प्रमाणं बीजमव्ययम् ॥ अर्थोऽनर्थो महाकोशो
महाभोगो महाधनः ॥४६ ॥ अनिर्विण्णः स्थवि
ष्ठो भूर्धर्मयूपो महामखः ॥ नक्षत्रनेमिर्नक्षत्री
क्षमः क्षामः समीहनः ॥ ४७ ॥ यज्ञ इज्या महे
ज्यश्च क्रतुः सत्रं सतां गतिः ॥ सर्वदर्शी निवृत्ता

त्मा सर्वज्ञो ज्ञानमुत्तमम् ॥४८॥ सुव्रतः सुमुखः
सूक्ष्मः सुघोषः सुखदः सुहृत् ॥ मनोहरो जित
क्रोधो वीरबाहुर्विदारणः ॥ ४९ ॥ स्वापनः स्वव
शो व्यापी नैकात्मा नैककर्मकृत् ॥ वत्सरो वत्स
लो वत्सी रत्नगर्भो धनेश्वरः ॥५०॥ धर्मगुब्धर्म
कृद्धर्मी सदसत्क्षरमक्षरम्॥ अविज्ञाता सहस्रांशु
र्विधाता कृतलक्षणः ॥ ५१ ॥ गभस्तिनेमिः
सत्त्वस्थः सिंहो भूतमहेश्वरः॥ आदिदेवो महादेवो
देवेशो देवभृत् गुरुः ॥ ५२ ॥ उत्तरो गोपतिर्गोप्ता

स. ज्ञानगम्यः पुरातनः ॥ शरीरभूतभृद्भोक्ता कपीन्द्रो व.
१२ भूरिदक्षिणः ॥ ५३ ॥ सोमपोऽमृतपः सोमः
पुरुजित्पुरुसत्तमः ॥ विनयो जयः सत्यसन्धो
दाशार्हः सात्वतांपतिः ॥ ५४ ॥ जीवो विनयि
ता साक्षी मुकुन्दोऽमितविक्रमः ॥ अंभोनिधिरन
न्तात्मा महोदधिशयोऽन्तकः ॥५५॥ अजो महार्हः
स्वाभाव्यो जितामित्रः प्रमोदनः । आनंदो नंदनो
नंदः सत्यधर्मा त्रिविक्रमः ॥ ५६ ॥ महर्षिः कपि १२
लाचार्यः कृतज्ञो मेदिनीपतिः ॥ त्रिपदस्त्रिदशा

ध्यक्षो महाशृङ्गः कृतांतकृत् ॥ ५७॥ महावराहो
गोविंदः सुषेणः कनकाङ्गदी॥गुह्यो गभीरो गहनो
गुप्तश्चक्रगदाधरः ॥ ५८ ॥ वेधाः स्वाङ्गोऽजितः
कृष्णो दृढः संकर्षणोऽच्युतः ॥ वरुणो वारुणो
वृक्षः पुष्कराक्षो महामनाः ॥ ५९ ॥ भगवान्भग
हा नन्दी वनमाली हलायुधः॥ आदित्यो ज्योति
रादित्यः सहिष्णुर्गतिसत्तमः ॥६०॥ सुधन्वा ख
ण्डपरशुर्दारुणो द्रविणप्रदः॥दिविस्पृक्सर्वदृग्व्या
सो वाचस्पतिरयोनिजः॥६१॥ त्रिसामा सामगः

वि. साम निर्वाणं भेषजं भिषक् ॥ संन्यासकृच्छमः स.
१३ शांतो निष्ठाशांतिः परायणः॥६२॥ शुभाङ्गःशांति
दःस्रष्टा कुमुदः कुवलेशयः ॥ गोहितो गोपतिर्गो
प्ता वृषभाक्षो वृषप्रियः ॥६३॥ अनिवर्ती निवृत्ता
त्मा संक्षेप्ता क्षेमकृच्छिवः ॥ श्रीवत्सवक्षाः श्री
वासः श्रीपतिः श्रीमतांवरः ॥६४॥ श्रीदः श्रीशः
श्रीनिवासः श्रीनिधिः श्रीविभावनः ॥ श्रीधरः
श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः॥६५॥स्वक्षः १३
स्वङ्गः शतानन्दो नंदिर्ज्योतिर्गणेश्वरः ॥ विजि

तात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥६६॥
उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतः स्थिरः ॥
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥६७॥
अर्चिष्मानर्चितः कुंभो विशुद्धात्मा विशोधनः ॥
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥६८॥
कालनेमिनिहा शौरिः शूरः शूरजनेश्वरः ॥ त्रिलो
कात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥६९॥
कामदेवः कामपालः कामी कांतः कृतागमः ॥
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनंजयः ॥७०॥

---

१ कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः । इत्यपि पाठः ।

ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ॥ ब्रह्म
विद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ७१ ॥
महाक्रमो महाकर्मा महातेजा महोरगः ॥ महा
क्रतुर्महायज्वा महायज्ञो महाहविः ॥ ७२ ॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रि
यः ॥ पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः
॥ ७३ ॥ मनोजवस्तीर्थकरो वसुरेता वसुप्रदः॥
वसुप्रदो वासुदेवो वसुर्वसुमना हविः॥७४ ॥ सद्ग
तिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ॥ शूर

सेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ७५ ॥
भूतावासो वासुदेवः सर्वासुनिलयोऽनलः॥ दर्पहा
दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ७६ ॥ वि
श्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ॥ अनेकमू
र्तिरव्यक्तः शतमूर्तिः शताननः ॥ ७७ ॥ एको
नैकः सवः कः किं यत्तत्पदमनुत्तमम्॥ लोकबं
धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ७८ ॥ सुव
र्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ॥ वीरहा वि
षमः शून्यो घृताशीरचलश्चलः ॥७९ ॥ अमानी

वि. मानदो मान्यो लोकस्वामी त्रिलोकधृक् ॥ सु स.
मेधा मेधजो धन्यः सत्यमेधा धराधरः॥ ८० ॥
१५ तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ॥ प्रग्रहो
निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ८१ ॥
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ॥ चतुरा
त्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ८२॥ समाव
र्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः॥ दुर्लभो दुर्ग
मो दुर्गो दुरावासो दुरारिहा ॥८३॥ शुभाङ्गो लो १५
कसारङ्गः सुतंतुस्तंतुवर्द्धनः॥इन्द्रकर्मा महाकर्मा

कृतकर्मा कृतागमः ॥८४॥ उद्भवः सुन्दरः सुन्दो
रत्ननाभः सुलोचनः ॥अर्को वाजसनः शृङ्गी जय
न्तः सर्वविज्जयी ॥८५ ॥ सुवर्णबिंदुरक्षोभ्यः सर्व
वागीश्वरेश्वरः ॥ महाह्रदो महागर्तो महाभूतो
महानिधिः ॥८६॥ कुमुदः कुन्दरः कुंदः पर्जन्यः
पावनोऽनिलः ॥ अमृताशोऽमृतवपुः सर्वज्ञः सर्व
तोमुखः ॥ ८७ ॥ सुलभः सुव्रतः सिद्धः शत्रुजि
च्छत्रुतापनः ॥ न्यग्रोधोदुंबरोश्वत्थश्चाणूरांध्र
निषूदनः ॥ ८८॥ सहस्रार्चिः सप्तजिह्वः सप्तैधाः

सप्तवाहनः ॥ अमूर्तिरनघोऽचिंत्यो भयकृद्भय
नाशनः ॥ ८९ ॥ अणुर्बृहत्कृशः स्थूलो गुणभृ
न्निर्गुणो महान् ॥ अधृतः स्वधृतः स्वास्यः प्राग्वं
शो वंशवर्द्धनः ॥ ९० ॥ भारभृत्कथितो योगी
योगीशः सर्वकामदः ॥ आश्रमः श्रमणः क्षामः
सुपर्णो वायुवाहनः ॥ ९१ ॥ धनुर्धरो धनुर्वेदो
दण्डो दमयिता दमः ॥ अपराजितः सर्वसहो नि
यंता नियमो यमः ॥ ९२ ॥ सत्त्ववान्सात्त्विकः
सत्यः सत्यधर्मपरायणः॥अभिप्रायः प्रियार्होऽर्हः

प्रियकृत्प्रीतिवर्धनः ॥ ९३ ॥ विहायसगतिर्ज्यो
तिःसुरुचिर्हुतभुग्विभुः ॥ रविर्विरोचनः सूर्यः स
विता रविलोचनः ॥ ९४ ॥अनन्तो हुतभुग्भोक्ता
सुखदो नैकदोऽग्रजः ॥ अनिर्विण्णः सदामर्षी
लोकाधिष्ठानमद्भुतः ॥ ९५ ॥ सनात्सनातनत
मः कपिलः कपिरव्ययः ॥ स्वस्तिदः स्वस्ति
कृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः ॥ ९६ ॥
अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ॥
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः॥९७॥

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः ॥ विद्व
त्तमो वीतभयः पुण्यश्रवणकीर्तनः॥ ९८ ॥ उत्ता
रणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ॥ वीरहा
रक्षणः संतो जीवनः पर्यंवास्थितः ॥ ९९ ॥ अनं
तरूपोऽनंतश्रीर्जितमन्युर्भयापहः ॥ चतुरस्रो ग
भीरात्मा विदिशो व्यादिशो दिशः ॥ १०० ॥
अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः॥ जन
नो जनजन्मादिर्भीमो भीमपराक्रमः ॥ १०१ ॥
आधारनिलयो धाता पुष्पहासः प्रजागरः॥ऊर्ध्व

गः सत्पथाचारः प्राणदः प्रणवः पणः ॥ १०२ ॥
प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः ॥ तत्त्वं
तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ १०३ ॥
भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ॥ यज्ञो
यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ १०४ ॥ यज्ञ
भृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ॥ यज्ञांतकृद्य
ज्ञगुह्यमन्नमन्नाद एव च ॥ १०५ ॥ आत्मयोनिः
स्वयंजातो वैखानः सामगायनः ॥ देवकीनंदनः
स्रष्टा क्षितीशः पापनाशनः ॥ १०६ ॥ शंखभृन्नन्द

की चक्री शार्ङ्गधन्वा गदाधरः ॥ रथाङ्गपाणिरक्षो
भ्यः सर्वप्रहरणायुधः ॥ १०७ ॥ सर्वप्रहरणायुधः
ॐ नम इति ॥ ॥ ॥ ॥ ॥
इतीदं कीर्तनीयस्य केशवस्य महात्मनः ॥ नाम्नां
सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १ ॥ य इदं
शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ॥ नाशुभं
प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः ॥ २ ॥ वेदांत
गो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ॥ वैश्योध
नसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ।३। धर्मार्थी

प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात्॥कामानवा
प्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाः॥४॥भक्ति
मान्यः सदोत्थाय शुचिस्तद्गतमानसः॥सहस्रं वा
सुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ ५॥यशःप्राप्नो
ति विपुलं ज्ञातिप्राधान्यमेव च॥अचलां श्रियमा
प्नोति श्रेयःप्राप्नोत्यनुत्तमम् ॥६॥न भयं क्वचि
दाप्नोति वीर्यं तेजश्च विंदति॥भवत्यरोगो द्युति
मान्बलरूपगुणान्वितः ॥ ७ ॥ रोगार्तो मुच्यते
रोगाद्बद्धो मुच्येत बंधनात् ॥ भयान्मुच्येत भी

तस्तु मुच्येतापन्न आपदः ॥ ८ ॥ दुर्गाण्यातितर
त्याशु पुरुषः पुरुषोत्तमम् ॥ स्तुवन्नामसहस्रेण
नित्यं भक्तिसमन्वितः॥९॥वासुदेवाश्रयो मर्त्यो
वासुदेवपरायणः ॥ सर्वपापविशुद्धात्मा याति
ब्रह्म सनातनम् ॥ १० ॥ न वासुदेवभक्तानामशुभं
विद्यते क्वचित् ॥ जन्ममृत्युजराव्याधिभयं नै
वोपजायते ॥ ११ ॥ इमं स्तवमधीयानः श्रद्धाभ
क्तिसमन्वितः ॥ युज्येतात्मसुखक्षांतिश्रीधृतिस्मृ
तिकीर्तिभिः॥ १२॥ न क्रोधो नच मात्सर्यं न लो

भो नाशुभा मतिः। भवन्तिकृतपुण्यानांभक्तानांपु
रुषोत्तमे ॥१३॥ द्यौःसचन्द्रार्कनक्षत्रा खंदिशोभू
र्महोदधिः॥वासुदेवस्य वीर्येण विधृतानि महात्म
नः ॥ १४ ॥ ससुरासुरगन्धर्व सयक्षोरगराक्षस
म् ॥ जगद्वशे वर्ततेदं कृष्णस्य सचराचरम्॥१५॥
इन्द्रियाणि मनोबुद्धिः सत्त्वं तेजो बलं धृतिः ॥
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १६॥
सर्वागमानामाचारः प्रथमं परिकल्पते॥ आचार
प्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥१७॥ ऋषयः

पितरो देवा महाभूतानि धातवः ॥ जंगमाजं
गमं चेदं जगन्नारायणोद्भवम्॥ १८ ॥ योगो ज्ञानं
तथा सांख्यं विद्याः शिल्पादिकर्म च ॥ वेदाः शा
स्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १९ ॥ एको
विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ॥ त्रीँल्लोकान्
व्याप्य भूतात्मा भुंक्ते विश्वभुगव्ययः ॥ २० ॥
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ॥ प
ठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ २१ ॥
विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ॥ भजंति

ये पुष्कराक्षं न ते यांति पराभवम् ॥ २२ ॥
अर्जुन उवाच ॥ पद्मपत्रविशालाक्ष पद्म
नाभ सुरोत्तम ॥ भक्तानामनुरक्तानां त्राता भव
जनार्दन ॥ २३ ॥ श्रीभगवानुवाच ॥ यो
मां नामसहस्रेण स्तोतुमिच्छति पांडव ॥ सोऽह
मेकेन श्लोकेन स्तुत एव न संशयः ॥ २४ ॥
नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरो
रुबाहवे ॥ सहस्रनाम्ने पुरुषाय शाश्वते सहस्रको
टीयुगधारिणे नमः ॥ २५ ॥ नमः कमलनाभाय

नमस्ते जलशायिने ॥ नमस्ते केशवानन्त
वासुदेव नमोस्तु ते ॥ २६ ॥ वासनाद्वासुदेवस्य
वासितं भुवनत्रयम् ॥ सर्वभूतनिवासोऽसि वासु
देव नमोऽस्तु ते ॥ २७ ॥ नमो ब्रह्मण्यदेवाय गो
ब्राह्मणहिताय च ॥ जगद्धिताय कृष्णाय गोविं
दाय नमोनमः ॥ २८ ॥ आकाशात्पतितं तोयं
यथा गच्छति सागरम् ॥ सर्वदेवनमस्कारः
केशवं प्रति गच्छति ॥ २९ ॥ एष निष्कण्टकः
पन्था यत्र संपूज्यते हरिः ॥ कुपथं तं विजानीया

द्रोविंदरहितागमम् ॥ ३० ॥ सर्ववेदेषु यत्पुण्यं
सर्वतीर्थेषु यत्फलम् । तत्फलं समवाप्नोति
स्तुत्वा देवं जनार्दनम् ॥ ३१ ॥ यो नरः पठते
नित्यं त्रिकालं केशवालये ॥ द्विकालमेककालं
वा क्रूरं सर्वं व्यपोहति ॥ ३२ ॥ दह्यंते रिपवस्त
स्य सौम्याः सर्वे सदा ग्रहाः ॥ विलीयन्ते च
पापानि स्तवे ह्यस्मिन्प्रकीर्तिते ॥ ३३ ॥ येन
ध्यातः श्रुतो येन येनायं पठितः स्तवः॥दत्तानि
सर्वदानानि सुराः सर्वे समर्चिताः ॥ ३४ ॥

इह लोके परे वापि न भयं विद्यते क्वचित् ॥
नाम्नां सहस्रं योऽधीते द्वादश्यां मम सन्निधौ
॥ ३५ ॥ स निर्दहति पापानि कल्पकोटिशता
नि च ॥ अश्वत्थसन्निधौ पार्थ कृत्वा मनसि के
शवम् ॥ ३६ ॥ पठेन्नामसहस्रं तु गवां कोटि
फलं लभेत् ॥ शिवालये पठेन्नित्यं तुलसीवन
संस्थितः ॥ ३७ ॥ नरो मुक्तिमवाप्नोति चक्र
पाणेर्वचो यथा ॥ ब्रह्महत्यादिकं पापं सर्वं सद्यो
विनश्यति ॥ ३८ ॥ इति श्रीमन्महाभारते शत

साहस्र्यां संहितायां वैयासिक्यामानुशासनिके पर्वणि दानधर्मोत्तरे भीष्मयुधिष्ठिरसंवादे श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रं सम्पूर्णम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥ यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १ ॥ स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ॥ रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः ॥२॥ सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम् ॥ सर्वतः श्रुति-

मँल्लोके सर्वमावृत्य तिष्ठति ॥ ३ ॥ कविं पुराणमनुशासि-
तारमणोरणीयांसमनुस्मरेद्यः ॥ सर्वस्य धातारमचिन्त्य-
रूपमादित्यवर्णं तमसः परस्तात् ॥ ४ ॥ ऊर्ध्वमूलमधः
शाखमश्वत्थं प्राहुरव्ययम् ॥ छन्दांसि यस्य पर्णानि यस्तं
वेद स वेदवित् ॥ ५ ॥ सर्वस्य चाहं हृदि सन्निविष्टो मत्तः
स्मृतिर्ज्ञानमपोहनं च ॥ वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वे-
दविदेव चाहम् ॥ ६ ॥ मन्मना भव मद्भक्तो मद्याजी मां
नमस्कुरु ॥ मामेवैष्यासि युक्त्वैवमात्मानं मत्परायणः ॥ ७॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे सप्तश्लोकीगीता समाप्ता ॥